# पञ्चवटीकाव्यम्

मैथिलीशरणगुप्तविरचितम्

हिन्दीभाषाया अनूदितम्

अनुवादकः

राधावल्लभः

# पञ्चवटीकाव्यम्

## मैथिलीशरणगुप्तविरचितम्

हिन्दीभाषाया अनूदितम्

अनुवादकः

राधावल्लभः

प्रकाशकः

संस्कृतपरिषत्

संस्कृतविभागः

सागर विश्वविद्यालयः

सागरम् -४७० ००३

## ।।समर्पणम्।।

सागरनगररत्नाय संस्कृतेऽनुवादकर्मप्रवीणाय
सुपण्डिताय श्रीप्रेमनारायणद्विवेदवर्याय
पञ्चवटीकाव्यानुवादः समर्प्यते।

## भूमिका

राष्ट्रकविविरुदविभूषितस्य मैथिलीशरणगुप्तस्य पञ्चवटीकाव्यं हिन्दीकाव्यपरम्परायां प्रथितम्। काव्यमिदं छात्रजीवने विद्यालये मया पाठ्यक्रमे निर्धारितत्वादपाठि। छात्रजीवन एव काव्यस्यास्य संस्कृतपद्यानुवादो मया व्यधायि। अनुवादोऽयं परस्तात् संवित्पत्रिकायां १९७२ई० वर्षे अंशतः प्रकाशितः। सच सम्प्रति संसोध्य संम्पूर्ण इदम्प्रथमतया पुस्तकाकारं प्रकाश्यते।

मैथिलीशरणकवेः रचनायां शूर्पणखायाश्चरित्रं किमपि वैशिष्ट्यं भजते। सा हि काव्येऽस्मिन्नाधुनिकशिक्षितयुवत्या प्रातिनिध्यं विधत्ते। तद्ब्याजेन आधुनिकतायाः परिणतिं प्रकटीकरोति कविः।

अनुवादे मया मूलकाव्यस्य आत्मा यथा अक्षतोऽवतरेत् तता प्रयासो विहितः। मन्ये संस्कृतपाठकानां परितोषाय मूलकाव्यस्य आस्वादाय चायमनुवादोऽलं स्यादिति।

—राधावल्लभः

# पूर्वपीठिका

त्यक्त्वा तातनिदेशतोऽखिलमहो राज्यं धरां धाम च
मैथिल्याऽनुगतो हि राघववरो रामो वनं प्रस्थितः।
दृष्ट्वा लक्ष्मणमागतं प्रचलितस्त्वं कुत्र रामोऽब्रवीत्
यत्र त्वं व्रजसीति नम्रवदनः सौमित्रिराहाग्रजम्।।

सीता प्राह-- तवाग्रजः प्रचलितो गुर्वाज्ञया काननं
त्वं चेमं त्वनुयासि किं मुनिरहो हित्वा गृहं देवर!
नाहं कोऽपि मुनिर्न गौरवमपि त्यागस्य काङ्क्षे पुनः
रामाङ्घ्रीयुगलस्य खल्वयमहो सेवारतः सेवकः।।

कर्तव्यं किमये तवैतदिति तं रामोऽब्रवील्लक्ष्मणं
नम्रो नम्रशिराः स आह नु मया तत् ते कृते किं कृतम्?
सीता सस्मितमाह- देवर कृतं प्रेम त्वया केवलं
मुक्ताशुक्तिनिभे च वाष्पविकले जाते रघोर्लोचने।।

एताः क्रीडन्ति सर्वत्र गगने च स्थले जले।
रश्मयो रमणीतुल्याश्चारुचन्द्रस्य चञ्चलाः ।।

विस्तीर्णा विद्यते ज्योत्स्ना धरण्यामम्बरे तथा।
पुलकैरञ्चिता भाति पृथिवी शाद्वलाङ्कुरैः।। २।।

अधः पञ्चवटीं रम्यः पर्णशालो विनिर्मितः।
तत्सम्मुखमासीनः स्वच्छस्फटिकशिलातले।।

धीरो वीरश्च निर्भीकः को नु जागर्त्ययं पुमान्?
धनुर्धरश्च तेजस्वी सुप्तेऽपि भुवनेऽखिले।।

योगिनो रूपमाधृत्य भोगीव कुसुमायुधः।
निद्रां हित्वा स्थितः कस्मिन् व्रते वीरो विचक्षणः?।।

राजभोगस्य योग्योऽपि वैराग्यं समुपाश्रितः।
विपुले विपिने शान्त एकाकी चैव संस्थितः।।

यस्यायं प्रहरी जातः किं धनं तत्र विद्यते।
कुटीरे यस्य रक्षायै प्राणपण्यमयं स्थितः।।

मर्त्यलोकस्य मालिन्यं दूरीकर्तुमुपागता।
कुटीरमेनमध्यास्ते साक्षाल्लक्ष्मीः शुभाङ्गना।।

लज्जेव वीरवंशस्य  विद्यते सैव कामिनी।
वीरः कथं न स्यादस्याः प्रहरी रक्षाव्रती जनः।।

विविक्तो विपुलोऽयं हि कान्तारः कालसन्निभः।
अवशिष्टा निशा चात्र निशाचरभयं महत्।।

मनश्चलं प्रकृत्यैव मौनं नेवेदमश्नुते।
स्वयमेकान्त एवेदं भाषते च शृणोति।।

धनुर्धरोऽत एवायं स्वगतं भाषते वचः।
मध्ये मध्ये मुदा दृष्टिमितस्ततः क्षिपन्

"अहो क्षीरसिता ज्योत्स्ना निस्तब्धा च निशा परम्।
स्वच्छन्दं हि मरुद्वाति निरानन्दा न कापि दिक्।।

समाप्तं प्रकृतेः कर्म कालेनैतावतापि नो।
नटीव मधुरं लास्यं विदधाति तथा ह्यसौ।।

शयितेऽप्यखिले लोके मही मुक्ताकणानियम्।
विकिरत्याशु प्रभाते तान् सङ्ग्रह्णाति प्रभाकरः ।।

सन्ध्यावध्वै पुनस्तांश्चोपहारीकरोति सः।।
येनास्याः श्यामलं रूपं शोभां वहति नूतनाम्।१६।।

त्रयोदशा अतीता नो वत्सरा वसतां वने।
परं कटुः प्रसङ्गोऽसौ ह्यस्तनः प्रतिभाति माम्।।

जिग्मिषून् काननं त्वस्मान् विलोक्य विकलः पिता।
आर्तो यदा विसंज्ञश्चाभवद् दुःखकर्षितः।।

वनवासावधिः सद्यः समाप्तिं समुपेष्यति।।
अयं जनः परं लब्धा किमतो महद् धनम्?।।

आर्यो रामस्तु राज्यस्य धुरं नूनं वहिष्यति।
प्रजार्थं विवशो व्यस्तोऽस्मानपि विस्मरिष्यति।।

जनानामुपकाराय एक एव जनः कथम्।
विश्रामं नैव प्राप्नोति कर्मण्येव रतः सदा।।

आत्मनो हितकार्येषु स्वयमेव जना कथम्।
सचेष्टा नैव जायन्ते सौमनस्येन कर्मठाः?।।

मध्यमाम्बा राजमाता भवितुं काङ्क्षति स्म सा।
निर्वास्यार्यं रघुपतिं स्वार्थान्धा पदलोलुपा।।

चित्रकूटे तु तां वीक्ष्य करुणाप्लुतमभून्मनः।
सर्वे तां ददृशुः किन्तु स्वात्मानं न ददर्श सा।।

भरतोऽप्यदर्शयच्छ्लाघ्यं त्यागं स भ्रातृवत्सलः।
राज्ञामपि शतं तस्य नाप्नुयाच्छोडशीं कलाम्।।

अहो मौर्ख्यं जनानां हि राज्यं यद् बहु मन्यते।
राज्यादपि वरं मन्ये रमणीयमिदं वनम्।।

नूनं राज्यपदं नाम लक्ष्यं न कदापि मनस्विनाम्।
विहाय राज्यं वनं यत्ते नोऽनूचानाश्च शिश्रिरे।।

अयं पन्थाः परं श्रेष्ठो दर्शितः किल पूर्वजैः।
परिवर्तनमेवात्र नराणां किल जीवनम्।।

यत्राग्रजो वसन्नास्ते सुराज्यं तत्र जायते।
स्वच्छन्दं विहरन्त्यत्र प्रजास्तस्मिन् प्रशासति ।।

पञ्जरेष्वरुद्ध्यन्ते नागरैर्ये विहङ्गमाः।
उन्मुक्तास्तेऽनुरज्यन्तेवनेऽस्मिन्स्नेहपोषिताः।।३०।।

समानाः पशुभिः सन्ति पतिताः खलु ये नराः।
इति मिथ्या वचो मन्ये पशवो पतिताद् वराः।।

निसर्गनियमान् सर्वे नातिक्रामन्ति ते क्वचित्।
तथैव पुरुषस्त्यागी देवेभ्योऽप्यतिरिच्यते।।

आगत्यागत्य मध्याह्ने विचित्राः पशुपक्षिणः।
पञ्चवट्यां भक्षयन्ति भोजनं सीतयाऽर्पितम्।।

जनन्या सह क्रीडन्ति शिशवश्चपला यथा।
तथैव सीतया देव्या स्नेहप्रमुदिता इमे।।

शब्दायते तीरमेतद् गोदावर्या मृदङ्गवत्।
जलानि प्रवहन्त्यत्र नदन्तो गद्गदं मधु।।

नृत्यन्ति पल्लवास्ताम्राः सौरभं विकिरन्ति च।
पुष्पाणि, चन्द्रताराश्च दृश्यन्ते गगने स्फुटम्।।

ध्यानमग्ना विभान्त्येते वैतालिकविहङ्गमाः।
नवीनकाव्यरचनायां मग्नाः कविगणा यथा।।

मध्ये मध्ये स्वगर्वं स शिखण्डी नर्तको मुदा।
दर्शयत्यत्र च स्पर्धां कुर्वन् वैतालिकैः सह।।

हरीतिमा नयनयोरनन्तः प्रसृतः पुरः।
श्रूयते स्खलतां रम्या निर्झराणां च झङ्कृतिः।।

विद्यते हिमकमो वन्यो यथा हि सरसः शुचिः।
रम्या वन्यजनानां सा तथैव विमला रुचिः।।

मुनीनामत्र सत्सङ्गः सुलभस्तत्त्वदर्शिनाम्।
आख्यानश्रवणं तेभ्यो लाभो हि परं वने।।

विकासि जीवनं पुष्पं मार्गे बहलकण्टके।
येषां तैः किल सम्प्राप्तो मानो गन्धोऽत्र वै शुचिः।।

मङ्गलं परमं चाहुराश्रमे शुकसारिकाः।
पुण्यश्लोकयशोगानं मुनिकन्यास्तथा जगुः।।

आर्यस्य वनराज्येऽस्मिन् सुखं जीवन्ति जन्तवः।
युगपज्जलं पिबन्त्यत्र नद्यां सिंहमृगादयः।। ४४।।

गुहांश्च शबरांश्चापि प्रसादयति च प्रभुः।
अहो सरलता तेषां सामान्यानां तथा नृणाम्।।

कथ्यन्तेऽन्त्यजा एते सवर्णैर्गर्वतुन्दिलैः।
अपवित्रं मनो येषां मन्तव्यास्तेऽन्त्यजाः परम्।।

विपिने व्यञ्जनेभ्योऽपि नास्त्यस्माकं प्रयोजनम्।
मधुरं च जलं कन्दमूलमेवात्र भोजनम्।।

प्रसादं भ्रातृजायायाः कैकेय्याश्च विषण्णताम्।
स्मारं स्मारं द्वयं चैतत् त्यागो राज्याद् वरं मम।।

प्रसादो यदि विश्रान्तो चित्ते चैवापरिग्रहात्।
प्रासादैः किं तदुत्तुङ्गैः सन्ततैस्तैः परिग्रहात्।।

पादपेषु जलं नित्यं सिञ्चत्यार्या सदा स्वयम्।
क्षुरप्रेणापि कुरुते यदा वा कृषिकर्म सा।।

कियत् सा गौरवं सौख्यं सन्तोषं च समश्नुते।
तुच्छो वसुपतेः कोषः स्वावलम्बिनृणां कृते।।

अपूर्वो विद्यते नूनं मुनीनामपरिग्रहः।
अत्रेश्चैवानुसूयाया अपूर्वा पुण्यशालिता।।

सहजोऽकृत्रिमोऽपूर्वो लोकोऽयं च परः स्फुटः।
निर्विकारश्च लोकेस्मिन्नस्माभिः प्रापि मुक्तिदः।।

ज्ञातीनां स्मृतिर्नूनं मानसं नो मुहुर्मुहुः।
दुनोति विपिनेऽस्मिन् सा शल्यच्छिन्नं करोति तत्।।

विप्रयुक्ते जने स्वीये पापमाशङ्कते मनः ।
साहचर्ये तदीये तु निशङ्कं तत् प्रजायते।।

इच्छाम्यत्र समागत्य पश्येयुः परमाद्भुतम्।
स्वजना महिमानं तु सकृदस्य वनस्य च।।

विस्मितास्ते भविष्यन्ति दृष्ट्वाऽऽर्यं हृष्टमानसम्।।
विहरन्तं तथा स्वैरं  कानने स्वे गृहे यथा।।

बह्व्यस्ता जीवने बाधा अस्माकं तु समागताः।
बाधाः किन्तु न बाधेरन् शक्तिस्साऽधिगता परम्।।

यदा बाधा समाप्ताः स्युः शक्तिरेषा न यास्यति।
वनवासे समाप्ते च न यास्यति वनस्मृतिः।।

आमोदं च प्रमोदं नो नैव जानन्ति मातरः।
उपलब्धं तथास्माभिरङ्कं च प्रकृतेर्गुरुम्।।

सङ्घर्षबहुलं लोके जीवनं चेति कथ्यते।
विबुधैः किन्तु क्रीडैषा सद्य आनन्ददायिनी।।

रोदित्यस्मत्कृते नूनमूर्मिलासौ तपस्विनी।
व्यर्थं विव्यथिता मुग्धाऽजानती नः सुखं वने"।।

इत्येवं चिन्तयन् मग्नो योगीव लक्ष्मणो बभौ।
पुनर्लोचन उन्मील्य दृष्टवान् परमाद्भुतम्।।

चमत्कृतोऽभूदवलोक्य कन्यकां
समक्षमर्चेः प्रखरां शिखामिव।।

स्मितं दधानां वदनेऽतिसुन्दरं
विहाय लज्जां च मनोज्ञरूपिणीम्.।

विभूषितां स्वर्णविभापिशङ्गितैः
विभूषणै रत्नमयैः रमां यथा।
सुपुष्पितां पल्लविनीं नतां च तां
मरुच्चलां नृत्यपरां लतामिव।।

प्रवाहयन्तीं कलुषां दृगञ्चला-
दतीवदीर्घात् खलु वासनानदीम्।
परागपङ्क्तिं हि यथोत्पलद्वया-
दतृप्ततृष्णातरलायितेक्षणाम्।।

विचिन्वतीं स्वं च मंनोरथं मुदा
मृगीं स्वयं तां मृगयारतां तथा।।
उपेत्य संवीक्ष्य सुलक्ष्मलक्ष्मणं
मनोरथं प्राप्य भृशं प्रहर्षिताम्।।

नितम्बपृष्ठे चिकुरस्य सन्ततिं
ललामहस्तेन चलां प्रकुर्वतीम्।।
मिलिन्दपङ्क्तिं जलजेन सुन्दरीं
समागतां किन्नु परागसौरभात्।।

अथापरस्मिन् करपल्लवे मृदौ
मनोज्ञमालां दधतीं सुवासिताम्।
रतिप्रियस्येव करे धनुर्लतां
सुशोभितां कल्पलतामिव स्थिताम्।।

दृष्ट्वा तस्याभवच्छङ्काप्रेङ्खादोलायितं मनः।
लक्ष्मणस्य समक्षं तामबलां प्रबलामिव।।

संशयावर्तपतितो नैव तीरं स लब्धवान्।
स्वप्नशालः कथमहो पुष्पितो मयि जाग्रति?।।

विस्मितं वीक्ष्य तं प्राह रमणी सस्मितानना।
मनोज्ञमूर्तिरप्येषा कौटिल्यकुटिलेक्षणा। ।

"कथं शूरोऽपि सुभग विस्मितोऽस्यवलोक्य माम्।
अबलां किमत्र वैचित्र्यं चञ्चलश्चकितोऽसि यत्?।।

प्रथमं मयैव वक्तव्यं लज्जां त्यक्त्वापि, नो पुनः।
पृष्टाहं भवता क्षेममहो निर्ममता नृणाम्"।।

तावत् प्रकृतिमापन्नो गम्भीरो घनघोषवत्।
अब्रवील्लक्ष्मणो वाक्यं प्रगल्भां सस्मितं च ताम्।।

"सत्यमेवास्मि सुभगे दृष्ट्वा त्वां विस्मयान्वितः।
निशीथे त्वं कथमहो चरस्येकाकिनी वने?

अबलां ब्रूषि स्वात्मानं दर्शयन्ती प्रगल्भताम्।
निरीहेष्वपि पश्यन्ती निर्ममत्वं जनेषु च।।

यद्यकरिष्यं प्रथममहमेव हि भाषणम्।
धर्महीनोऽभविष्यं च प्रवादविषयं गतः।।

अस्तु तावत् तव मतं सत्यं मद्विषये परम्।
भो भामिनि नास्त्येव त्वयि मे ममता मनाक्।।

पित्रोः, पत्न्यां, धने धाम्नि धरायामप्यहं सदा।
स्वस्यापि जीवने नित्यं निर्ममोऽस्म्येव सर्वथा।।

एकस्मिन् ममता मेऽस्ति निर्द्वन्द्वोऽस्मि तथाप्यहम्।
ममता महिलास्वेव शृणु चारुस्मिते भवेत्।।

शूरं वीरं च मां मत्वा ततो भीरुं ब्रवीषि यत्।
दर्शिताहो त्वया सत्यं स्वकीया सूक्ष्मदर्शिता।।

वीक्ष्य भाषणभङ्गीं ते सत्यमस्मि भयाकुलः।
वने त्वां रमणीं दृष्ट्वा संशयं परमं गतः।।

मानवीं यदि त्वां मन्ये लज्जा सा त्वयि नास्त्यहो।
यदि त्वां दानवीं मन्ये लावण्यं कथमिदं न तत्।।

वनदेवीं यदि ब्रूयां मुग्धा सा तु भवेत् परम्।
का त्वं किं च रहस्यं ते स्वयं त्वं ब्रूहि सुन्दरि"।।

"का त्वं केवलमित्येव पृष्टवानसि निष्ठुर।
किं वाञ्छसीत्यपि कथं नैव पृच्छसि मामहो।।

कथं शान्तिं कलयतां मनो मे च्छलितं त्वया?
सहजं न परावर्त्स्ये सकाशं ते समागता।।

जानीहि मां प्राघुणिकां किमातिथ्यं करिष्यसि?
अपि वज्रात् कठोरं ते मनो यास्यति मार्दवम्?

इत्युक्त्वा स्वाधरं रामा रामानुजपुरोऽदशत्।
सस्मितं प्रेक्षमाणा तं निर्भयं चैव संस्थिता।।

संयतो लक्ष्मणोऽवादीदकिञ्चनोऽस्मि भामिनि!
अपूर्वैश्वर्यसंयुक्ता मायाविनी च त्वं स्थिता।।

आतिथ्यं ते करिष्ये किं निर्धनोऽस्मीति लज्जितः"।
अवगच्छामि भावं ते रमणी प्राह रूपिणी।।

देवानां दुर्लभं मन्ये तव यो विद्यते वसुः।।
इदं रूपं तथा चेदं यौवनं परम धनम्।।

वैराग्यं कलयित्वेह किमर्थं सुभग स्थितः?
अपास्य रत्नालङ्कारान् लब्धुं त्वां चैव योगिनम्।।

योगिवेषं ग्रहीष्यामि भोगाय प्रियदर्शन!
दूरीकर्तुं समर्थास्मि किन्त्वहं विघ्नसन्ततिम्।।

कस्माद्धेतोर्व्रतमिमं समाचरसि यौवने?
सामर्थ्यमस्ति मयि तत् दातुं यत् तवेप्सितम्।।

धने यद्यभिलाषा ते मत्तो गृहाण कोटिशः।
विधास्यामि कुवेरं त्वां जहीमां कृच्छ्रसाधनाम्।।

प्रतिशोधस्तवेष्टो वा यदि कस्यापि वैरिणः।
ब्रूहि मां तं तु धक्ष्यामि केवलं कोपवह्निना।।

यदि प्रेमपिपासुर्वा तपःकूपं खनस्यहो।
कस्या अपि कृते मुग्धो व्यर्थं क्लिश्नासि स्वं मनः।।

न यौवनधनायास्मै प्राणान् पणीकरिष्यति?
का नु, रक्षय यत्नाद्धि मैनं नाशय भो वृथा।।

हेतुना यदि केनापि जगद् भारोऽस्ति ते यदि।
स्वर्गमेतद्धि मन्यस्व रममाणो मया सह।।

लक्ष्मणस्तद्वचः श्रुत्वा गम्भीरः पुनरप्यभूत्।
"अनेन तव भावेन कृतज्ञोऽस्मि वराङ्गने।।

सामान्या किन्तु नैवं हि प्रस्तावं स्त्री करोत्यहो।
अभावो नास्ति मे कोऽपि सत्येव वदामि ते"।। सत्यमेव

"तपश्चरसि निष्कामं किमस्मिन् त्वं वयस्यहो।
किमाश्रमक्षये पापं नैव त्वामाश्रयिष्यते?।।

यदि तन्न भवेत् किन्तु तपसस्तु फलं महत्।
लप्स्यते हि त्वया नूनं किन्नु तस्य करिष्यसि?।।

यत्नाद्धि विविधोपायैः परिश्रमपरायणाः।
नास्वदन्ते फले किं ते पादपान् वर्धयन्ति ये?"।।

विहसंल्लक्ष्मणः प्राह-- "धन्या खल्वसि कामिनि।
यत् तापसपदं मह्यमनायासं प्रयच्छसि।।

तपःफलं लभेयं हि तदा त्वनुपभुज्य तत्।
रक्षिष्यामि त्वदर्थं च यत्नादहं सुरक्षितम्।।

व्यहसत् सुन्दरी चाह-- "यद्यहमेव तत् फलम्।
भवेयं किन्नु त्वं तर्हि करिष्यसि द्रुतं वद"।।

"अन्विष्यामि सुयोग्यं हि पात्रं यद्यपि दुर्लभम्"।
"अन्विष्टपूर्वः स मया मत्समक्षं च संस्थितः।।

यद्यप्यज्ञातनामाऽसौ", "कोऽसा"विति पपृच्छ सः।
वाकोवाक्येन तस्याश्च विस्मितश्च चमत्कृतः।।

त्वमित्याह रमणी सा जोषं तस्थौ मुहुर्मुहुः।
अपाङ्गभङ्ग्या पश्यन्ती सलज्जमिव तं तथा।।

"शान्तं पापमहो बाले परिणीतोऽस्म्यहं सकृत्"।
"किमेतेन नरास्त्वत्र बहुभार्या न भवन्ति किम्?।।

नारीमेवानुबध्नन्ति शास्त्रबन्धा नरैःकृताः।
स्वकृते तु नरैः पूर्वं सौकर्यं बहुधा कृतम्.।

"बहुभर्तृविधानं तन्नार्यः शास्त्रं प्रणीय तत्।
कुर्युः किन्न, नराः किन्तु प्रशंसन्ति पतिव्रताः।।

अविचार्यानुकरणं शास्त्राणां मे न रोचते।
स्वान्त एव सतां श्रेष्ठमाचाराणां निदर्शनम्।।

नार्याश्च भव्यभावो यः साभिमानं मया स्तुतः।
नरेष्वपि च तं द्रष्टुं समीहेऽहं तु सर्वदा।।

क्षमस्व बहुभार्यात्वं नानुमन्ये नृणामहम्।
कुशला कृतिनं गत्वा नयान्यं कृतकृत्यताम्"।।

"अन्यं नरं कथं काङ्क्षे मनस्तु मे त्वया हृतम्"।
"चौर्यापराधोऽयमहो न्यस्तः शिरसि मे कथम्"?

किं मिथ्ये'त्यपृच्छत् सा, च प्राह- भद्र, मे मनः।
निर्गतं मेऽधिकाराद्धि विवशं विकलं तथा।।

चन्द्रस्य दोषः कथमस्त्यसौ हि
यद्वञ्चितो मूढमतिश्चकोरः।
इत्यात्थ तत् साधु न, सौम्य किन्नु
सोमेन क्षिप्ताः किरणाश्चकोरे?।।

दीप्तिं न दीपो यदि दर्शयेत् स्वां
दद्यात् पतङ्गः स्वहविः कथं तत्?।
जाले कथं वा निपतेत् कुरङ्गः
वाद्येन मुग्धं मृगयुर्न कुर्यात्?।।

रूपं मनोहारि कथं हि धृत्वा
त्वं संस्थितोऽस्यत्र छली वनेऽस्मिन्?

प्राभातिके वाति समीरणे किं
पद्मस्य स्यान्नो कलिका प्रसन्ना"?

"विलक्षणे मा स्वच्छन्दगामिनी भूः सुलक्षणः।
पवनाधीनपताकेवे"त्यब्रवील्लक्ष्मणश्च ताम्।।

"आवेगविवशा यस्य रूपं त्वं बहु मन्यसे।
कुलं तस्य तथा शीलमपि जानासि भामिनि?"।।

मोटयन्ती तनुं स्वीयां साऽब्रवीदयि निष्ठुर!
आदौ हृतं मनो मे च प्रश्नैश्छिनत्सि तत् पुनः।।

स्वस्यैव कुलशीले हि प्रेमाविष्टा न पश्यति।
प्रेमपात्रस्य तु कथं पुनर्जीवितशेवधेः।।

गतप्राया रात्रिर्मधुरमधुरं मां प्रति वच
इदानीं भाषस्व प्रिय नु सरसं प्रेमविकलाम्।
इयं ते तिष्ठामि प्रणयपथिका कान्त पुरतः।
कपाटानुद्घाट्य हृदयभवने मां नय सुखम्"।।

"भ्रान्ता कथं त्वं भ्रमसि प्रमुग्धे
प्रेमा हि नायं ननु मोह एषः।
विश्वास एषोऽस्ति तवात्मनो नो
विद्रोह एषोऽस्ति च चेतसस्ते।।

विषेण सिक्ता किल वासनेयं
नेयं हि प्रीतिश्च सुधाद्रवाक्ता।
नायं हि पन्थाश्चरितश्च सद्भि-
र्नेयं नु रीतिर्महती त्वनीतिः।।

मोहेन मां वञ्चयितुं प्रवृत्ता
नो जानती स्वस्य हिताहितं वा।
माऽऽत्मानमस्मिन् खलु मोहकूपे
निपात्य मा याहि विनाशगर्तम्।।

विनाशरूपा मृगतृष्णिकेयं
शान्तिं न तुभ्यं न कदापि दद्यात्।
भ्रान्तिं त्यजेमां खलु पापरूपां
परो नरोऽहं न तवास्मि भोग्यः।।

इति निगदति तस्मिन् लक्ष्मणे साग्रहं तां
विविधविधविधानैर्दर्शयत्याशु नीतिम्।
अभवदपि निशायाश्चावसानं तु यूनो-
र्न खलु च विवादः शान्तिमाप्नोत् तयोः सः।
ततश्च प्राच्यामभवत् प्रकाशो
वर्णान्तरं दृश्यपटः प्रपेदे।
पलायितं चान्धतमो हि सैन्यं
रवेर्मयूखैरसिभिर्भयान्वितम्।।

स्वर्णारुणा कान्तिमती बभूव
प्राची पुरस्ताच्च विभूषिताङ्गी।
द्वारं कुटीरस्य पुरः स्थितस्यो-
षा अपावृत्य स्वयं स्थिता किम्?

नो वाम्बरस्थाऽपि च तादृशी सा
उषा भवेत् स्फूर्तिमयी च रम्या।
उषा अवन्यास्तु सजीवरूपा
चाकाशसंस्थास्ति पुनर्जडैव।।

अस्या मुखं वीक्ष्य बभूव पाण्डु-
र्जगाम चास्तं स विधुः सलज्जः।
सम्भ्रान्त आसीत् खलु लक्ष्मणोऽपि
तां वीक्ष्य स्वीयां स तु बन्धुजायाम्।।

प्रमदापि चमत्कृता च सा
सहसा वीक्ष्य बभूव जानकीम्।
ग्लपिताऽस्तु कुमुद्वती श्रियं
प्रविलोक्याथ यथा हि पद्मजाम्।।

क्वचिदभ्रपटे ददर्श सा
सुषमां देव्युषसः पुनश्च ताम्।
सुषमां खलु जानकीगतां
र्ललितांताममलां व्यलोकयत्।।

भूषणैरावृतां कम्रां स्वामङ्गलतिकां पुनः।
मैथिल्याः परतो हीनामपश्यत् सा गतप्रभाम्।।

संस्थिता पुरतस्तस्या निर्दोषाऽल्पविभूषणा।
अरुणोदयवेलायां प्रतीची तारकान्विता।।

दृष्ट्वा तां हर्षफुल्लानि जहसुः कुसुमानि च।
कलिंका विकचा जाताः सस्मितां वीक्ष्य तां मुदा।।

समीरोऽवहन्मन्दं चुम्बन् पुष्पमुखानि च।
सम्मर्दो भ्रमराणां च मुखराणामभूद् द्रुतम्।।

शाखासनस्था विहगाश्चुकूजुर्दर्शका तथा।
नाटकं प्रेक्षमाणास्ते पुरतः प्रस्तुतं मुदा।।

अहो अहो प्रयोगोऽयमहो अहो नटनं त्विदम्।
पञ्चवट्या रङ्गभूमावित्थं ते कलरवैर्जगुः।।

सीताऽपश्यदिमां रामां ततो रामानुजं त्विमम्।
अन्तरा तौ तथाऽपूर्वां व्यकिरद्धसितप्रभाम्।।

"अहो देवर नैष्ठुर्यमतिथिं ह्यवमन्यसे।
अन्योऽस्याः नु कथं त्वं स्या यस्यास्त्वमसि जीवितम्।

निराशं कुरुते कोऽपि याचकं किं कृती क्वचित्।
अन्यच्चाश्रयं प्राप्तुं नेयं ते हि समागता।।

दातुमेषा समायाता सर्वस्वं मञ्जुभाषिणी।
कार्पण्यं यदि दाने ते सङ्कोचो ग्रहणे कथम्?"।।

इत्युक्त्वा मैथिली भूयो जहास मधुराक्षरैः।
रक्तयोर्लक्ष्मणस्तस्या अनमत् पादपद्मयोः।।

"सफलाः सन्तु ते कामाः" सीता चेत्याशिषं ददौ।
प्राह- "सर्वः श्रुतो नैव संल्लापो युवयोर्मया।।

कदाऽऽरब्धः कथं भूतः शुकस्य सह रम्भया।
संवादो नेति जानामि सद्य एवाहमागता।।

पुनस्तां रमणीं सीताऽवादीच्च सस्मितानना।
"भद्रे मा खलु खिन्ना भूरीदृशो मेऽस्ति देवरः।।

परिणीतां वधूं त्यक्त्वा काननं यः समागतः।
किं भणामि वयस्यस्मिन्नैव वैराग्यमाश्रितः।।

तथापि बोधयिष्यामि त्वदर्थं यदि वाञ्छसि।
ससुखं देवरेणोढा त्वमत्रैव वसिष्यसि।।

किन्तु त्वमैश्वर्यमयी दरिद्रा वनवासिनः।
स्वस्यैव स्वामिनो वा स्मः वयं  स्वस्यैव सेवकाः।।

तथापि न त्वया किञ्चित् करणीयं भविष्यति।
भद्रे सर्वविधानैस्त्वां सुखयिष्याम्यहं सदा।।

यदि क्वचिन्मे बाधन्ते पालिताः पशुपक्षिणः।
तत्कृतेऽधुनैव त्वं क्षन्तुमर्हसि मां पुनः"।।

रमणी प्राह-
"यावज्जीवं भविष्यामि बालाऽहं तव सेविका।
यदि मां देवरवधूं देवि त्वं प्रविधास्यसि।।
सीता प्राह-

वनेऽस्मिन् भगिनीं नूनं यदि त्वत्सदृशीं लभे।
कृतार्थाऽहं भविष्यामि संवदन्ती त्वयाऽनिशम्।।

भङ्गीभणितिसाकूतैरित्येवं ते जजल्पतुः।
लक्ष्मणश्चान्तरा तूष्णीमासीच्चैव पराङ्मुखः।।

भ्रातृजाया विजानाति भावं मे रमणीं प्रति।
इत्याकलय्य तुष्टोऽपि दर्शयामास सोऽरुचिम्।

प्राह सीतां- न पश्यामि, भ्रातृजाये मनागपि।
लाभं मनोविनोदेभ्यो बालया त्वेतया सह।।

किं लक्ष्मण! सीताऽऽह- विनोदः क्रियते मया?।
बद्धस्नेहोऽग्रजे स्वस्मिन् निर्दयो वर्तसे कथम्?।।

वियुक्तां तां पुनर्जायां चिन्तयस्यूर्मलां यदि।
मनो भग्नं न तस्याः स्यात् नूतनात्ते परिग्रहात्।।

न सा भगिनी मे त्वां मनाक् सन्दूषयिष्यति।
तव प्रीतिं पुनर्ज्ञात्वा स्वयं तुष्टा भविष्यति।।

स्वप्रियायार्पितं प्रेम वयं नार्यस्त्वनन्तरम्।
प्रतिदानं न वाञ्छामः सर्वस्वं मन्महे प्रियम्।।

वरमालां समादाय समायाता स्वयंवरा।
अर्पणाय स्वसर्वस्वं तुभ्यमेषा समुत्सुका।।

लज्जां मज्जागतां त्यक्त्वाऽऽवेदयति स्वभावनाम्।।
कीदृशोऽयं तवाचारो नन्वयुक्त इमां प्रति।।

सस्मितो लक्ष्मणोऽवादीन्नाचारं वेद्म्यहं पुनः।
निवेदयामि किं भावं भावशून्योऽस्मि सर्वथा।।

विधाय ग्रीवया भङ्गं तिष्ठ तिष्ठेत्युवाच सा।
तन्निषेधमुपेक्ष्यैव कुटीरोन्मुखमाह च।।

आर्यपुत्र समुत्थाय सुप्रभातं विलोक्यताम्।
स्वयंसिद्धिः समायाता ननु भार्यामिषेण यत्।।

क्षणादपश्यद् रमणी श्यामां शोभां च सम्मुखम्।
नररूपेण चायातं भूतले शस्यश्यामलम्।।

कामरूपं घनं रम्यमनिर्वाच्यमनोहरम्।
आभासितं समन्तात्तं जीवनस्य स्वरोचिषा।।

उत्त्थाय विपुले स्वस्य प्रणमन्तं हि लक्ष्मणम्।
विद्युत्तुल्यं घनश्यामो रामो क्रोडे व्यधान्मुदा।।

सीताऽऽह पश्य भो नाथावसरोऽपूर्व एष वै।।
विलोक्येन्द्रोऽपि भीतः स्यात्तवानुजतपो महत्।

इन्द्रासनं तु मन्येऽहं तृणायायं हि मन्यते।
किन्त्वप्सरसां किन्नो शृणुयात् प्रार्थनां क्वचित्?।।

प्रकृतिर्युवयोरेव त्वपूर्वा खलु विद्यते।
अन्यथाऽऽगतां लक्ष्मीं को नाङ्गीकुरुते मुदा?।।

माला स्वयंवराहस्ते म्लायते सुपुष्पिता।
देवरेण परं स्वस्य कण्ठः कुण्ठीकृतः स्वयम्।।

वीक्ष्य बालां वसुमतीं निरपेक्षं चानुजं तथा।
रामः क्लेशविरामोऽसौ घनगम्भीरमाह ताम्।।

"का त्वं शुभे किमथवा वाञ्छस्यत्र समागता"।।
रोमाञ्चिता च बाला सा राममाह प्रहर्षिता।।

"अहो त्वदीयदाक्षिण्यं यद् वाञ्छां मम पृष्टवान्।
मुक्ताः किं दशनाग्रे तेऽधराग्रे किं च विद्रुमाः।।

वेषेणैव प्रकटितः सत्यं परिचयो मम।
वाञ्छामि किमहं चैतन्नूनं व्यक्तं हि विद्यते।।

कथितं यन्मयाऽपूर्वं न लज्जे कथने पुनः।
भविष्यज्जीवनं नाहं चिन्त्तयामि कदापि वा।।

वर्तमाने क्षणे नित्यमहं दत्तेक्षणा सदा।
निर्द्वंद्वा निर्भया नूनं विचरामि वने सुखम्।।

मनस्यन्यद् वचस्यन्यद् व्यवहारे तु नास्ति मे।
सहजा शक्तिरमोघा मे कौटिल्यं न मनागपि।।

अधिकारो मनस्विन्याः स्वस्मिंश्च मम विद्यते।
विहरामि यथेच्छं च स्वच्छन्दं खल्वहं सदा।।

न बिभेमि न व्यथे चाहं न कालं चिन्तयाम्यहम्।
भयं मे कुत्र जायेत बाधा मत्तो हि बिभ्यति।।

निशाथकाले सम्प्राप्ते भ्रमणाय मनोऽभवत्।
एकाकिनी भ्रमन्ती च वनेऽस्मिन् समुपागता।।

अत्र स्थितः शिलायां च दृष्ट एष तवानुजः।
पाषाणवद् दृढं गाढो भावसिन्धौ च निश्चलः।।

दृष्ट्वेमं हृदये भाव उदियाय च निर्मले।।
निश्छलत्वात् प्रकृत्या तं त्वस्मायाहं न्यवेदयम्।।

यन्मे मनोऽमरः कोऽपि क्षुब्धं कर्तुं न प्राभवत्।
लोभो मोहश्च वा यद्धि लुब्धं कर्तुं न प्राभवत्।।

दत्तं च तन्मनो ह्यस्मै न समर्थाऽभवं पुनः।
परावर्तयितुं चास्मात् तन्मनो स्वं लोभमोहितम्।।

निभृतं संस्थिता पार्श्वे पश्यन्तीमं जनं चिरम्।
मग्नाऽऽत्मानमजानन्ती ह्यपूर्वे भावसागरे।

ततो मनःप्रसूनैश्च गुम्फयित्वा मनोरमाम्।
मालां मानसीमस्मा उपदां दातुमागता।।

अयं तु केवलं का त्वं शुष्कमित्येव पृष्टवान्।
न तु किं वाञ्छसीत्यपि यथा पृष्टं त्वयाऽनघ।।

कामं भवतमुभौ साधू वाऽसाधू भवतं युवाम्।
महान्तस्त्वादृशाः सन्ति बाला एतादृशाः पुनः।।

कामं मे भवतां हास उपहासं करोत्यसौ।
स्वानुभूते विचारे च दृढं च विश्वसिम्यहम्।।

तद् गुरुत्वं त्वयि गुरौ विद्यते शृणु मानद।
दृढता मृदुता चापि पुनरस्मिन् कठोरता।।

वरमालां त्वमेतां हि जयमालां प्रधारय।
पर्णशाला त्वदीयैषा प्रासादायेत भोः क्षणात्।।

भ्रूमङ्गं स्वभार्याया विस्मार्षीर्विहरन् मया।
हैमकूटस्य शिखरे कैलासेऽपि वनेऽथवा"।।

सस्मितं मैथिली प्राह– "सपत्नीमेव त्वामहम्।
स्वीकरिष्यामि मे किन्तु मा मृत्युं त्वं तु कामयेः।।

इच्छामि केवलं चाहं नित्यं भर्तुस्तु दर्शनम्।
धृत्वाऽङ्गुलिं हि प्रथमं प्रकोष्ठो नु त्वया धृतः।।

लक्ष्मणः प्राह-"युक्तं हि परेषां कलहे सदा।
औदासीन्यं ग्रहीतुं वै न तु मध्यस्थता पुनः।।

भ्रातृजाये प्रपञ्चेऽस्मिन् संलग्ना भवती कथम्।
परार्थे यतमाना यत् स्वार्थाच्चापि प्रवञ्चिता"।।

राघवो रमणीमाह-- "कथनेनैव ते ध्रुवम्।
आकृत्या चैव प्रकृतिः प्रकटा विद्यते शुभे।।

अपूर्वगुणसंयुक्ता नूनं त्वमसि किन्त्वहम्।
गृहं त्यक्त्वा सपत्नीको वसामि विजने वने।

एकाकी विद्यते सोऽयं परिणीतोऽपि मेऽनुजः।
मदर्थे विगणय्यायं स्वजनानिह चागतः।।

अन्तर्मुखोऽयं सङ्कोचप्रकृतिर्ज्ञायते पुनः।
आदौ दत्तं त्वया प्रेम किन्त्वस्मै प्रबलं शुभे।।

अपूर्णचरितान् ये हि पूर्णान् कुर्वन्ति मानवाः।
आत्मनिष्टा नरास्ते प्रतिष्ठां प्राप्नुवन्ति वै।।

जायते यदि कामिन्यां प्रेमासक्तोऽनुजस्त्वयि।
स्ववर्णितगुणानां ते सत्यता तेन ज्ञास्यते।।

प्रज्ञानेत्रा इत्येह कथ्यन्तेऽन्धा नरा जनैः।
मत्प्रेम्णाऽन्धतां यातोऽनुजश्चैष विद्यते।।

प्रेम्मा त्वया हि यद्येष आयत्तीक्रियते ध्रुवम्।
सत्यं ब्रवीमि धन्यासि नात्रोत्प्रासोऽस्ति नर्म वा।।

भेददृष्ट्या ततोऽपश्यद् रमणी गुणगर्विता।
लक्ष्मणः किन्तु तर्जन्या वर्जयन्नाह स व्रती।।

"शान्तं पापं मदर्थं त्वं मान्या जातास्यधुना त्वहो।
यदन्यान्यवदान्या त्वमनुरक्तासि राघवे"।।

रामः प्राह- "तदानीं तूभयथैवासि वञ्चिता।
अनुजस्य वधूर्यत्त्वं प्रागेवाभूः स्वयं मम ।।

श्रुत्वोभयोर्निषेधं हि सा विचित्रदशां गता।
इतो भ्रष्टा ततो नष्टा गता कर्तव्यमूढताम्।।

प्रवाहभग्ना नौकेव पवनेन प्रकम्पिता।
संशयावर्तमग्ना च विग्ना चुक्रोश कन्यका।।

क्रुद्धाऽकथयदासां किं त्यजेयमधुना ह्यहम्?
स्नेहबन्धं नाशयामि प्राङ् मया यश्च योजितः?।।

विस्मर्तव्यं त्वया नैतच्छक्तिः सा मयि विद्यते।
प्रेमान्धो मत्कृते नूनं विवशस्त्वं भविष्यसि।।

क्षुद्रमेतत्तव धनुर्मद्भ्रूकार्मुकसम्मुखम्"।
राघवः प्राह- कामं ते भवेच्छक्तिर्हि तादृशी।

प्रकृतिस्तु नराणां सा बाले चास्ति बलीयसी।
पारवश्यं भवेत् कामं भीत्या प्रीतिर्न जायते।।

इत्युक्त्वा मौनमाश्रित्य गम्भीरो राघवोऽभवत्।
सौमित्रिः किन्तु सौद्धत्यं सक्रोधमब्रवीच्च ताम्।।

"विस्मर्तव्यं त्वया नैतत् मुग्धया मदमत्तया।
शक्ता नरा पराजेतुं त्वादृशीं कुटिलां खलाम्"।।

तन्त्रीव विषमा नारी सहसा झङ्कृताऽभवत्।
किं सर्वा अबला नूनं भवन्त्यत्र सदाऽबलाः?

नैव जानासि स्वप्रेम क्रुद्धा विज्ञाय निष्फलम्।
अबला प्रबलाः नूनं भवन्त्येवापमानिताः।

सानुरोधः सविनयः प्रेमा स्त्रीणां भवेद् यथा।
तथैव तासां वैरश्च बलवान् प्रबलो महान्।।

वैरादपि करालश्च क्रोधोऽस्माकं भवत्यसौ।
द्वेषजः प्रतिरोधस्तु क्रोधादपि विशिष्यते।।

पश्यताहं यथाऽपूर्वा सुन्दरी च सुकोमला।
तथा घोरा कठोरापि भवितुं शक्नोमि साम्प्रतम्।।

सर्वेऽपश्यन् समक्षं च सत्यमेव सविस्मयम्।
रम्यरूपमहो जातं क्षणेन विकटं महत्।।

सर्वैर्मन्दसमीरस्य दृष्टं झञ्झाप्रनर्तनम्।
विकृतावर्तनं चैव सन्धायां तमसः पुनः।।

कालकीटकृतं चापि वयःकुसुमकर्तनम्।
क्रमशो दृष्टमासीत्तैर्नेदृशं परिवर्तनम्।।

कपोलयुगलं रम्यं जातं क्षौद्रगृहद्वयम्।
शूकरस्येव सञ्जाते सृक्किणी प्राङ् मनोहरे।।

दंष्ट्रा करालानि भयानकानि
जातानि मुक्तादशनानि तस्याः।

बीभत्सरौद्रौ च रसौ प्रकामं
व्यक्तिं गतौ तौ सहसा समक्षम्।।

रक्तांशुकं जातमहो कुचैल-
मस्थीनि जातानि विभूषणानि।
अलङ्कृताऽऽसीन्मणिभिश्च रुक्मै-
र्जाता च साऽतीव भयप्रदेव।।

अलकाश्चान्त्रसंयुक्ता जातास्तस्या मनोरमाः।
पुष्पाणां वरमाला सा मुण्डमाला बभूव च।।

तुल्यं द्रुमाद्र्योश्च शरीरमस्या
दीर्घैर्नखैः शूर्पणखैव साऽऽसीत्।
विलक्षणा लक्षणरूपहीना
सा दानवी राक्षसवंशभूता।।

तं वीक्ष्य वेपथुमती मिथिलेशकन्या
गन्तुं शशाक नहि साध्वससन्नगात्री।
स्तब्धेव भीतेव न वक्तुमहो शशाक
संरुद्धकण्ठनिहितार्गलदन्तजिह्वा।।

रामो लक्ष्मणश्चैव दृष्टवन्तौ परस्परम्।
सीतां दृष्ट्वा प्रियो राम आश्वासयच्च लक्ष्मणः।।

सीता प्रकृतिमापन्ना रामं वीक्ष्याथ सस्मितम्।
प्रत्याचष्ट च नारीं तां करालां लक्ष्मणः पुनः।।

परिणतिः किमेषैव तव रूपस्य दारुणा।
छलयस्येव किं नित्यं हे मायाविनि सज्जनान्।।

परिचयेन भीताः स्मो न वयं विकृतेन ते।
असमर्था समक्षं नोऽबले त्वमबला ह्यसि।।

चर्मनेत्रेण दृष्टं च सुन्दरं यत् प्रतीयते।
किन्नु वास्तविकं रूपं तस्यैतादृशमेव वा?।।

यत् स्यात् तत् स्यात् विनेतुं त्वां धृष्टां चैव
कलङ्किनीम्।
प्रस्तुतोऽस्मि न येन त्वमेवमन्यान् प्रतारयेः।।

नारीं मत्वा न हन्मि त्वां विकलाङ्गीं करोमि च।
वञ्चनेऽसमर्था स्याः व्यक्तलक्ष्मतया पुनः।।

आक्रान्तुमुद्यतायाश्च लक्ष्मणेन झटित्यहो।
तीक्ष्णं कृपाणमादाय कर्तिते कर्णनासिके।।
भूत्वा कुरुपा रुधिराप्लुता च
रुद्यमाना ध्वनिनाऽथ तारम्।।

झञ्झेव वेगेन पलायितैव
सा सर्वतो धूलिमहो किरन्ती।।

हाहाकारः स तस्याश्च सुचिरं तत्र गुञ्जितः।
आतुरा चास्थिरा जाता विषण्णा मिथिलेशजा।।

शङ्काऽऽतङ्कमयी तस्या हृदये प्रबभूव सा।
लङ्का जाता यया नूनं स्वर्णवर्णा च धूलिसात्।।

सनिःश्वासमवादीत् सा--" ननु सञ्जातममङ्गलम्।
प्रातरेव, प्रतिहतं कुर्यात् सङ्कटमीश्वरः"।।

लक्ष्मणो बोधयन्नाह निःशङ्का भव साम्प्रतम्।
देवि तेऽनुचरो यावदेष जागर्ति लक्ष्मणः।।

न भयं नैव वा बाधा कापि बाधेत निश्चयम्।
निर्भयाश्च निरातङ्काश्चरिष्यामोऽत्र वै मुदा।।

न वयं वृण्महे बाधाः स्वयमायान्ति ता यदि।
निश्चिन्ताश्च हताशङ्का उद्वेगं नैव प्राप्नुमः।।

परीक्षाः सन्ति विपदस्त्वस्माकमिति मे मतिः।
ये बिभ्यति नरास्ताभ्यः किन्नरास्ते च कातराः।।

रामः प्राह- "सुखं दुःखं कालाधीनं हि विद्यते।
न सुखेषु स्पृहा कार्या न च दुःखेषु दीनता।।

सङ्कटान्नैव भेतव्यं स नो यावत् समागतः।
आगतं सङ्कटं वीक्ष्य प्रतिकुर्यान्नरोऽभयः"।।

"अपवार्य भवन्तं च तथाऽऽर्यां मिथिलेशजाम्।
सङ्कटान् सोढुकामोऽस्मि"-- सहर्षं
लक्ष्मणोऽब्रवीत्।।

विविधान् सङ्कटान् सोढुं कियती शक्तिरस्ति मे।
ज्ञास्यामि येन सामर्थ्यं स्वकीयां कृतकृत्यताम्।।

नैव जानामि किं शिष्टं सोढुं सम्प्रति लक्ष्मण।
मत्कृते यत् त्वया सोढं सोढुं तत् कोऽनुजः क्षमः।।

"आर्य शक्नोमि सोढुं च त्वत्कृते सङ्कटान् बहून्।
एतत्ते हि वचः किन्तु न सोढुं शक्नुयामहम्।।

सीताऽऽह-- ठत्तिष्ठ सौमित्रे, किमेभिः कथनैरहो। ?
मेच्छ त्वं विपदः सोढुं स्वयमेव कदापि वा।।

सेर्ष्यः सम्प्रति नैव स्यात् कोऽपि नः प्रति चाचरेत्।
द्रोहं, प्रधारयेद् वैरं न वा घातं विचारयेत्।।

निर्बाधं चैव सानन्दं वने निवसतां सदा।
वहत्वेवं हि नो नित्यं निभृतं जीवनं नदी।।

किं नैवोज्झितमस्माभिः राज्यं राज्यनिधिश्च सः।
निधिरत्र च यः प्राप्तो विधिस्तं न सहेत किम्?

विधेर्वार्ता तु वृद्धानां समक्षं क्रियतां त्वया।
देवि स्वयं त्वं जानासि मन्येऽहं बहु पौरुषम्।।

इत्युक्त्वा लक्ष्मणोऽस्मयत् तथा सीता च राम च।
आमोदस्य च्छटा तत्र सन्तताऽऽसीत् समन्ततः।।

वनं भार्यापि नानीताऽहो दृष्टं तव पौरुषम्।
वाष्पाकुला बभूवैवमुक्त्वा च मिथिलेशजा।।

"एहि यावो नदीं चेतो घटमादाय साम्प्रतम्।
मत्स्यानां भोजनार्तं च गृह्यन्तां धान्यतण्डुलाः।।

हर्षोत्फुल्लं हि सौमित्रिं घटमादाय संस्थितम्।
तत्क्षणं मोदमग्नः स राघवो वाक्यमब्रवीत्।।

क्षणं लक्ष्मण तिष्ठ त्वं च्छविरेषा सुदुर्लभा।।
प्रसन्नं त्वां हि पश्यामि क्षणं सार्धं च सीतया।।

इदमद्य मया लब्धं निर्वाणं चक्षुषोः परम्।
अयं हि परमो लाभो वने मे वसतो ध्रुवम्।।

आकाशप्रतिमो तथा घनतनू रामो गभीराकृतिः
पश्यन् स्नेहमयो दृशा करुणया सीतां तथा चानुजम्।
इत्युक्त्वा पुलकाञ्चितः स सहजं प्रेमामृताप्लाविते
सिक्ते ते ह्यकरोच्च पादपलते दृष्ट्यम्भसाऽऽमोदिते.।

*।। समाप्तं चेदं पञ्चवटीकाव्यम्।।*

## राधावल्लभः

मध्यप्रदेशस्य राजगढमण्डले १९४९-तमखिस्ताब्दे फेब्रुअरीमासस्य पञ्चदशदिनाङ्के लब्धजनुः एम०ए०,पी०एच्-डी०,डी०लिट्० इत्युपाधिभिर्विभूषितः त्रिपाठी राधावल्लभः सम्प्रति डॉ०-हरीसिंह- गौरविश्वविद्यालयस्य संस्कृतविभागे आचार्याध्यक्षपदमलङ्करोति। १९७०ई० वर्षाद् विश्वविद्यालयेऽयमध्यापयति, द्वात्रिंशच्छात्रा अस्य निर्देशने पी०एच्-डी०-त्युपाधिमधिगतवन्तः।

संस्कृत-हिन्द्याङ्ग्लभाषासु अस्य ७४ ग्रन्थाः प्रकाशिताः। एतेषु *आदिकविर्वाल्मीकिः* (१९८६), *संस्कृत कविता की लोकधर्मी परम्परा* (१९८६.), *काव्यशास्त्र और काव्य* (१९८७), *लैक्चर्स ऑन ना[illegible]* (१९९२) *नाट्यशास्त्र और विश्व रंगमंच* (१९८८), *नाट्यशास्त्रविश्वकोश* (चतुर्षु [illegible] ध्रियमानम्) इत्याद्या ग्रन्था उल्लेखार्हाः। शोधपत्रिकासु त्रिपाठिनः ११२ शोधलेखा [illegible] प्रायाः विविधाश्चान्ये लेखाः प्रकाशिताः। आ कैशोर्यात् संस्कृते हिन्द्यां च काव्यकथारचनायां प्रवृत्तस्यास्य संस्कृते चत्वारि काव्यसङ्कलनानि, बहूनि नाट्यानि च प्राकाश्यं गतानि। हिन्दीभाषायाः प्रतिष्ठितपत्रिकासु पञ्चत्रिंशल्लघुकथा अस्य प्रकाशिताः, यासु काश्चन मराठी- मलयालम्-भाषयोरनूदिताः प्रकाशिताश्च। संस्कृते लिखितासु मौलिकलघुकथास्वप्येकस्या हिन्द्यां तेलगुभाषायां चानुवादः प्राकाश्यं गतः। पञ्चदश संस्कृतरूपकाण्यनेन हिन्द्यामनूदितानि, तेषु कांनिचित् प्रख्यात रङ्गकर्मिभिः प्रयुक्तानि। हिन्द्यां विरचितानि द्वित्राणि मौलिकरूपकाण्यप्यस्य ब०व०कारन्त- देवेन्द्रराजाङ्कुरप्रभृतिश्रेष्ठ-निर्देशकैः प्रयोगं प्रापितानि।

पञ्चदशभिः राष्ट्रियैः अन्ताराष्ट्रियैर्वा पुरस्कारैरयं सम्मानितः। तेषु उत्कृष्टशोधकार्याय मुम्बईस्थाया एशियाटिक सोसायटीति संस्थाया महामहोपाध्याय-पुरुषोत्तमवामनकाणेस्वर्णपदकम् (१९८९ ई०), अखिलभारतीयप्राच्यविद्यासम्मेलनस्य पुरस्कारद्वयम् (१९७२,१९८८), *कालिदास की समीक्षा परम्परा* इति ग्रन्थस्य कृते म०प्र०संस्कृताकादेम्याः भोजपुरस्कारः (१९९२), *लहरीदशकम्* इति काव्यसङ्ग्रहाय उत्तरप्रदेशसंस्कृताकादेम्याः कालिदासपुरस्कारः (१९९३), *सन्धानम्* इति संस्कृतकाव्य-सङ्ग्रहस्य कृते नवदेहलीस्थायाः साहित्याकादेम्याः पुरस्कारः (१९९४), कलिकातास्थहिन्दी-अकादेम्याः राष्ट्रियहिन्दीरत्न- सम्मानः (१९९४) तथा च कनाडातोऽधिगतः रामकृष्णसंस्कृत- पुरस्कारः (१९९८) उल्लेखमर्हन्ति।